श्रीगणेशाय नमः॥ सः परमहंसस्य भेदाश्चाभेदश्च भेदाभेदौ अयं नो के भेदो नास्तीत्येवं प्रकारेण विचारं करोति
सः परमहंसः स्वापदीश्च आपदीश्च सपदी गलितौ स्वापदीश्च सुखफलो नास्ति दुःखफलो नास्ति किं वा विशीर्णो विस्मी
र्णो अनादि जन्मांतरकृतपुण्यपापौ नास्ति मायाश्च मोहाश्च मायामोहौ देहादि प्रपंच मायामोहौ नास्ति द्वयमधि
गतौ नाशो नास्ति किं अधिको नास्ति यस्य परमहंसस्य मनसि सकलप्रपंच मिथ्यास्वरूपमिति द्वयं करोति किं इत्येवं

श्रीगणेशाय नमः भेदाभेदौ सपदी गलितौ पुण्यपापे विशीर्णो मायामोहौ द्वयमधिगतौ नष्टसंदेहवृत्तिः॥
शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः॥१॥

प्रकारेण निःसंदेहो भवति शब्दातीतं देहादि प्रपंच विलक्षणातीतं प्रमाणातीतं स्वरूपं भवति त्रिगुणरहितं सत्वरज
तमो गुणात्मिका रहितं आत्मस्वरूपाश्चानुभवज्ञानं प्राप्नोति अथ अनंतरं निस्त्रैगुण्ये नित्यांशाखिवतांमोक्ष
मपि मार्गे मोक्षमार्गे विचरतां विहारं करोति तस्मात् कारणात् एतादृशगुणसंपन्न सः मुक्तपुरुषस्य विधिर्नास्ति
निषेधो नास्ति इति सिद्धांतः॥१॥

राम:
॥१॥

त्रैगुण्यविषया वेदा इति भगवद्वचनं यतयेपरब्रह्मणि आत्मानं जीवात्मस्वरूपं सकलवपुषां सकलशरी
राणां मध्ये तृणगुल्मलतादि तीर्यमनुष्याः स्थावरजंगमात्मिका हृदयकमलमध्ये अंतर्वहिश्चैतान्यपि परब्र
ह्मणि एकस्वरूपमेवास्थिताः अंतर्वहिश्च तत्सर्वं व्याप्य नारायणः स्थितः इति यजुर्वेदस्य श्रुतिर्विद्यमानत्वा

यद्वात्मानं सकलवपुषामेकमंतर्वहिस्थं दृष्ट्वा पूर्णं खमिव सततं सर्वभांडस्थमेकं॥ नान्यत्कार्यं
किमपि च ततः कारणाद्भिन्नरूपं निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः॥२॥

तर्केन प्रकारेण परब्रह्मणि स्थितः पूर्णं सनातनं स्वस्वरूपं निर्मयमई शाश्वतस्वरूपमिव सर्वभांडस्थमेकं सर्वभांड
स्य उदकस्य मध्ये रविप्रतिबिंबयोरिव परब्रह्मणि स्थितः नान्यत्कार्यं अन्यत्कार्यं परमेश्वर विना नास्ति का
रणमपि नास्ति कार्यकारणयोरुभयोभिन्नरूपं साक्षीभूतमित्यर्थः निस्त्रैगुण्ये त्रिगुणात्मिकातीतं अखंड
रूपं ध्यानं करोति स परमहंसस्य विधिः कः निषेधः॥२॥ राम राम राम॥ छ छ छ॥ छ छ छ॥

३०
२॥

हेम्नः सुवर्णाद्धुतवहगतं अग्निहोत्रमध्ये प्राप्तान्यनंतरं बहुविधभूषणानि सुवर्णं भवति तथैव हे भगवन् परमा
त्माउभयलोकानां जीवानां हृदयकमध्ये नानाविधप्रकारं स्थिता जलमिश्रितक्षीरं राजहंसविभागं कृत्वा क्षी
रं पानं करोति तथैव परमहंसः परब्रह्मणि प्रपंचस्य दुग्धं अंबुमिश्रितरूपयो व्यापक इति विचारं करोति एवं

हेम्नः कार्यं हुतवहगतं हेममेवेति तद्वत् क्षीरे क्षीरं समरसगतं तोयमेवांबुमध्ये॥ एवं सर्वं सम
रसतया त्वं पदं तत्पदार्थे निस्त्रैगुण्ये पथि विचरतो को विधिः को निषेधः॥३॥

सर्वं समरसतया एवं समस्तप्रपंचेषु समरस अग्न्योऽन्यतया त्वं पदं जीवतत्पदं परमेश्वरस्वरूपं अग्न्योऽ
न्यरूपेण स्थितयोरिति ध्यानं करोति निस्त्रैगुण्ये पथि विचरतां त्रिगुणातीतपथि ब्रह्ममार्गे विचरितं विहारं
करोति यस्य परमहंसस्य विधिः किं निषेधः किं॥३॥

रा
॥२॥

यस्मिन् परब्रह्मणि विश्वं सकलभुवनानां मध्ये सामरस्यैकभूतं अग्न्योऽन्यरूपतया एकरूप एव प्रकाशं करोति
अयं तु परमेश्वरः लोकानां मध्ये साक्षीभूत मित्यर्थः कूटस्थो क्षरउच्यते इति न्यायेन कः साक्षी अग्नौ निले अग्निहोत्रे वि
स्फुलिंगाय थाउत्पन्नो भवति तथा लीनो भवति यथा भवति तथा सर्वे जीवाः ईश्वरः अंतर्भूतो भवति यत् क्षीराब्धौ सम
रसतया यात् एव परब्रह्मणि क्षीराब्धौ यथा क्षीरं उत्पन्नो भवति तस्य जले पुनः अंतर्भूतो भवति तथैव अयं जी^

यस्मिन् विश्वं सकलभुवने सामरस्यैकभूतं उर्वीह्यापो नलमनिलखं जीवधेन क्रमेणापत् क्षीराब्धौ समरस
तया सैंधवैकत्वभूतं निस्त्रैगुण्ये०॥४॥ पद्मानद्योदधिसमरसो सागरत्वं प्रपन्ना तद्वज्जीवो लयपरिण
तं सामरस्यैकभूतं॥ भेदातीतं लयपरिगतं सच्चिदानंदरूपं निस्त्रैगुण्ये०॥५॥

वेश्वर अंतर्भूतो भवति तस्मात् दृष्टांतादेव अयं परमहंसः निस्त्रैगुण्ये गुणातीतपथि मोक्षमार्गे विचरित विहारं
करोति तस्माद्विधि नास्ति निषेधो नास्ति॥४॥ यथा नद्याः दधिगतलस्वरूपतया नानाविधप्रकारेण सागरं प्रतिप्राप्नो
ति तथैव जीवः परब्रह्मणि लयो भवति भेदातीतं लोकस्य जीवस्यातीतं सच्चिदानंदस्वरूपं शाश्वतं तन्मूल मित्यर्थः
निस्त्रैगुण्ये पथि जाग्रत स्वप्न सुषुप्ती ज्ञानं परित्यागमेव ईश्वरार्पणं करोति यस्य पुरुषस्य विधि नास्ति निषेधो ना

॥६॥
पुं

१०५०
॥३॥

सपरमहंसः स्वात्मबोधस्वरूपं स्वशरीरेण आत्मबोधस्वरूपतया देहेंद्रियातीत विधी चैतन्यज्ञानतया द्रष्टा पंल
दं करोति स परमहंसः लब्ध्वा आत्मानं मूढशरीराणां मध्ये परब्रह्मणि स्थितया द्वाज्ञानशरीराणां मध्ये परब्रह्मणि स्थि
तया ज्ञानशरीराणां मध्ये एकस्वरूपमेव अंतर्बहिः स्थिता एवं प्रकारेण लब्ध्वं करोति स परमहंसः सर्वे पापसमोहा
नां नाशं च करोति इदं परिदृश्यमानं सदसद्ब्रह्मज्ञानविचारं करोति निस्त्रैगुण्ये कूटस्थानानीतब्रह्ममार्गे विचरतीयस्य
द्रष्टा वेद्यं परमपदं स्वात्मबोधस्वरूपं बुध्वा आत्मानं सकलवपुषमेकमंतर्बहिःस्थं॥ भूत्वा नित्यं सदोदित
मिदं स्वप्रकाशस्वरूपं निस्त्रैगुण्ये॥६॥ कार्याकार्यं किमपि सततं नैव कर्तृत्वमस्ति जीवन्मुक्तस्थितहत
गतदुग्धवस्त्रावभासः॥ एवं देहे लयपरिगतं तिष्ठमानो विमुक्तो निस्त्रैगुण्ये॥७॥
परमहंसस्य विधिर्नास्ति निषेधो नास्ति॥६॥ कार्याकार्ययोः उभयोर्हि अयं लोके ब्रह्म विना कर्तृत्वमभो
क्तृत्वं नास्ति अयं परिदृश्यमानं प्रपंचं दुग्धवस्त्रावभासं दुग्धवस्त्रतुल्यमिति द्रष्टा स परमहंसः स्थिरं परं द्र
ष्टा अस्ति नेमो द्वस्थानं प्रति जीवन्मुक्तो भवति एवं प्रकारेण देहादिप्रपंचलयस्वरूपमिति ज्ञात्वा ब्रह्मविचारं
करोति यस्य परमहंसस्य विधिकः निषेधकः॥७॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ श्री
॥३॥

॥४॥

कः त्वं जीवस्वरूपकः भवान् कोयं ब्रह्मस्वरूपकः जीवब्रह्मयोः उभयोर्भेदो नास्तीत्यर्थः अयं ईश्वरः अंतर्हृदये किं
मपि च कश्चिन्मयमात्र प्रपंचं ईश्वर विना न संभवति अंतर्हृदयस्थाने विद्या चैतन्यज्ञानरूपतया सर्वप्रपंचपूर्ण
प्रकाशं आकाशस्वरूपमिति ध्यानं करोति प्रपंचस्य समरसगतं समानाधिकरणरूपतया ईश्वरस्वरूपमि
ति विचारं करोति निस्त्रैः निर्गतं तो गुणो यस्य सः निर्गुणः सर्वमपि निर्गुणस्वरूपमिति ज्ञात्वा यस्य परमहंसस्य विधिर्निषे
क त्वं कोहं किमपि च भवान् कोयमत्र प्रपंचः स्वसंवेद्यं गगनसदृशं पूर्णानंतप्रकाशं आनंदाख्यं समरसगतं बाह्यं
नर्व हि स्थ निस्त्रैगुण्ये॥८॥ सत्यं सत्यं परममम्लं शांति कल्पासाक्षिपं मायारण्ये दहन मनिलं जीव मेन क्रमेण॥
तेजोरूपं निगमसदृशं व्यासपुत्राष्टकं वा प्रातःकाले पठति मनसा प्राप्नुनिर्वाणमार्गं॥ ९॥ इति श्रीशुकाचार्यविरचि
तमष्टकं संपूर्णं॥
यो रूभयोर्नास्ति॥ ८॥ सत्यं सत्यमिति अयं श्लोकाष्टकार्थं सत्यं भवति इति व्यासपुत्राष्टकं श्रीशुकदेवेन
सत्यमिति कथितं तेन न दुःखं परममम्लं तं ये ये ज्ञानपुरुषाः परं उत्कृष्टं अम्लं तं मोदस्थानं ब्रह्मसायुज्यं प्राप्नोतीत्यर्थः शांति
रेव धीमंतः मनसि कल्पासाक्षीपं मंगलस्वरूपं तैलधारावच्छिन्नवाच्छिन्नज्ञानसोपाय ब्रह्मविचारं करोति तेजोरूपं अयं तेजो
रूपं ब्रह्मस्वरूपं निगमानां वेदानाम् व्याससदृशं सादी भूतं विचारं करोति मायारण्ये दहन मनलं यथा आरण्य अनलं अग्निभूतो
भवति न चैव मायास्वरूपी प्रपंचारण्यं ईश्वर अंतर्भूतो भवति जीवमेन क्रमेण सर्व जीवात्म क्रमेण ब्रह्मणा सह मुक्तो भव
ति येन नाना प्रातःकाले पठति ये नानि श्लोकाष्टकानि पठति प्राप्नुनिर्वाणमार्गं निर्वाणमार्गं प्राप्नोति प्राप्नोतीत्यर्थः इति शुकाष्ट